ePathshala पाठशाला
A Gateway to all Post Graduate Courses

| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
|---|---|---|
| पत्रम् (Paper Number) | 07 | |
| पत्रविषयः (Title) | वैदिकसाहित्यम् इतिहासश्च<br>History of Vedic Literature | |
| पाठ्यांशसंख्या पाठ्यांशनाम च<br>(Module Number & Module Name) | 15, मुण्डकोपिनषत्परिचयः | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | • अपरा विद्या<br>• परा विद्या<br>• गुरुसमाश्रयणम्<br>• ब्रह्मविद्यायाः फलानि | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) | |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रीयसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो.पीयूषकान्तदीक्षितः,<br>आचार्यः<br>न्यायवैशेषिकविभागस्य<br>श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली<br>110016 | साधुभद्रेशदासः<br>अध्यक्षः. बी.ए.पी.एस.<br>स्वामिनारायण रिसर्च इंस्टिट्यूट्<br>अक्षरधाम, नवदेहली | प्रो.के.ई.देवनाथन्,<br>कुलपतिः,<br>श्रीवेङ्कटेश्वर-वैदिकविश्वविद्यालयः,<br>तिरुपतिः |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P7_M15 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयसूची






| संस्कृतम् | पत्रसंख्या – | 07, वैदिकसाहित्यम् इतिहासश्च |
| --- | --- | --- |
| | पाठ्यांशसंख्या- | 15, मुण्डकोपिनषत्परिचयः |

**मङ्गलम्**

ॐ नमो नारायणस्वरूपाय

मुण्डकं मण्डितं याभ्यां ब्रह्मविद्याप्रबोधकम्। स्मरामि तावहं साक्षादक्षरपुरुषोत्तमौ॥
अक्षरं ब्रह्म सर्वज्ञं सर्वगं सर्वकारणम्। परमात्मा परं ब्रह्म ह्यक्षरात्परतः परः॥

## १. प्रस्तावना

अस्मिन् पाठे मुण्डकोपिनिषदः परिचयः प्रदीयते। प्रथममस्या उपनिषदो बाह्यं परिचयं प्राप्स्यामः। यत्र सा कस्मिन् वेदे समाहिता, कति तस्याः प्रकरणानि खण्डा मन्त्राश्चेत्यादि विज्ञास्यामः। ततश्च तस्याऽन्तरङ्गपरिचयं लप्स्यामहे। यत्र तस्याः प्रधानप्रतिपाद्यविषयो विचिन्तयिष्यते। तस्य च पुनः प्रधानप्रतिपाद्यविषयस्य कथमस्यामुपनिषदिविस्तार इत्यादिकं मूलग्रन्थमनुसृत्य प्रदर्शयिष्यते। पठितॄणां प्रतिपाद्यविषयाऽवगतिसौकर्यायेह मन्त्रक्रमं गौणीकृत्य विषयाऽनुसारं परिचय उपस्थापितः।

## २. बाह्यपरिचयः

मुण्डकं नाम शिरः। सर्वासु विद्यासु शिरःस्थानीयायाः ब्रह्मविद्यायाः अत्र स्फुटं सविस्तरं च उपदेशाद् इयमुपनिषद् मुण्डकेति प्रथिता। मुण्डकोपनिषद् अथर्ववेदे समाहिता। उपनिषदां वेदस्वरूपत्वेनाऽपौरुषेयत्वं नित्यत्वं चेति मुण्डकस्य क प्रणेता कश्च समय इति चिन्ताऽवकाशो नास्ति। संस्कृतमस्या भाषा, संवादोऽस्याः शैली। अङ्गिरःशौनकयोरिह संवादः। तत्र महर्षिरङ्गिरा उपदेष्टा गुरुः, शौनकश्च श्रोता शिष्यः। इयम् उपनिषदत् त्रिषु प्रकरणेषु विभक्ता। तानि प्रकरणानि इह मुण्डकम् इति संज्ञया व्यपदिष्यन्ते। पुनश्चैतानि त्रीण्यपि मुण्डकानि प्रत्येकं द्वयोः खण्डयोर्विभक्तानि। आहत्य अस्याः उपनिषदः षट् खण्डाः वर्तन्ते। पुनश्च तेषु तेषु खण्डेषु मन्त्राः सन्ति। तत्र प्रथममुण्डकस्य प्रथमखण्डे ९ मन्त्राः, द्वितीयखण्डे च १३ मन्त्राः सन्ति। द्वितीयमुण्डकस्य प्रथमखण्डे १० मन्त्राः, द्वितीयखण्डे च ११ मन्त्राः सन्ति। तृतीयमुण्डकस्य प्रथमखण्डे १० मन्त्राः, द्वितीयखण्डे च ११ मन्त्राः सन्ति। सर्वेषां संयोजनेनाऽऽहत्य मुण्डकोपनिषदि ६४ मन्त्राः सन्ति।

## ३. अन्तरङ्गपरिचयः

### प्रधानप्रतिपाद्यविषयः

ब्रह्मविद्यैवाऽस्या उपनिषदः प्रधानप्रतिपाद्यविषयः। गुरोः अङ्गिरसः शिष्यस्य च शौनकस्य संवादरूपेण लभ्यमानायाम् अस्यामुपनिषदि ब्रह्मविद्यायाः स्वरूपं, तत्प्राप्त्युपायाः, तत्फलादिकं सर्वं सुस्पष्टम् उपदिष्टम् उपलभ्यते। सैषा ब्रह्मविद्या इह परा विद्या इति व्यपदिष्टा।

**विषयविस्तारः**

ब्रह्मविद्यायाः सनातनत्वं प्रामाणिकत्वं च प्रख्यापयितुं चतुर्मुखाद्याप्तपुरुषप्रोक्तत्वमुखेन प्रामाणिकपरम्परा इहोपक्रमे प्रदर्शिता। यथा "**ब्रह्मा देवानां प्रथमः सम्बभूव। विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्या प्रतिष्ठाम् अथर्वाय ज्येष्ठपुत्राय प्राह॥ अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाऽङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम्॥**" (मु.१/१/१,२) इति।
एतामेव परम्परामग्रे वर्णयन्नाह "**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति॥**" (मु.१/१/३) इति।

शौनकोऽयं शुनकस्य पुत्रः। तस्य महती यज्ञशाला आसीत्। स च शास्त्रादिष्ट-विध्यनुसारं हस्ते समिधमादाय शिष्यभावेन अङ्गिरसं शरणम् उपजगाम। ततश्च प्रश्नं पप्रच्छ, हे भगवन्, कस्मिन् विज्ञाते सति सर्वमिदं चिदचिदात्मकं जगत्, सकलशास्त्रराशिवेद्यं वा सर्वं विषयवस्तु साक्षात्कृतं भवतीति। तथा चेयं बहुमूल्यजीवनस्य समयव्ययसंरक्षणा सर्वार्थसिद्धिकरा मोक्षबुद्धिजन्या प्रश्नप्रार्थना। अपि च परिदृश्यमानस्य जगतः कारणविषयिणी जिज्ञासा शिष्यस्य। एवमिह "उत तमादेशम् अप्राक्ष्यः। येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति छान्दोग्योपनिषदुक्तसद्विद्यावद् अत्राऽप्येकविज्ञानेन सर्वविज्ञानस्य जिज्ञास्यतया विषयीकरणम् उपलभ्यते।

**४. विद्याद्वैविध्यम् –**

**द्वे विद्ये वेदितव्ये**

एवं शौनकेन प्रार्थिते सति गुरुः अङ्गिराः प्रोवाच "**द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवाऽपरा च॥**" (मु.१/१/४) इति।

ब्रह्मविद्यायां निपुणानां महर्षीणामुद्देशं पुरस्कृत्य अङ्गिराः इह विद्यायाः प्रकारद्वयम् उपस्थापयति। एका परा। द्वितीया चाऽपरा। परा नाम श्रेष्ठा। अपरा नाम कनिष्ठा।

**५. अपरा विद्या**

तत्र प्रथमम् अपरां विद्यां निरूपयति "**तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति**" (मु.१/१/५) इति। यद्यपि "परा चैवाऽपरा च" इत्युद्देशक्रमाऽनुसारं परा विद्यैव प्रथमतो निरूपणीया भवति, तथापि तस्या अनन्तरमेव विस्तरशो निरूपयिष्यमाणत्वाद्, अपरायाः विद्यायाश्च परविद्यालाभे उपकारकत्वाद् "यदुपकारकं तत् पूर्वम्" इति लोकसिद्धन्यायने प्रथमतः अपरायाः विद्यायाः निरूपणम्।

इह ऋग्वेदादिचतुर्णां वेदानां तथा च शिक्षादितदङ्गानाम् अपरविद्यात्वेन ग्रहणम्। वेदाश्चत्वार इति तु प्रसिद्धम्। षट् तदङ्गानि शिक्षादीनि।

**तत्र शिक्षा।** वैदिकवर्णस्वराद्युच्चारणप्रकारनिरूपणं यत्र सा शिक्षा। तदुक्तं "शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तः शीक्षाध्यायः" (तै.१/२/१) इति। अस्याश्च शिक्षायाः पाणिनिशिक्षा-नारदशिक्षा-व्यासशिक्षादयो ग्रन्थाः प्रसिद्धाः।

**कल्पः।** वेदविहितकर्मणां क्रमपूर्वकं प्रयोगादिव्यवस्थापनकल्पकं शास्त्रं कल्पः। इदं च शास्त्रं श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्र-शुल्वसूत्रादिरूपम् आश्वलाय-कात्यायन-बौधायन-लाट्यायनादिनामभिः तत्तद्वेदसंलग्नतया भिन्नं भिन्नम् उपलभ्यते।

**व्याकरणम्।** व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दाः येनेति व्याकरणम्। इदं हि शास्त्रं प्रकृति-प्रत्ययादिप्रत्यायनेन शब्दसाधुत्वं प्रख्यापयति। पाणिनि-शाकटायनादिभिः प्रणीताः व्याकरणग्रन्थाः प्रसिद्धाः।

**निरुक्तम्।** निरुच्यते निःशेषेण उपदिष्यते तत्तदर्थाऽवबोधाय पदजातं यत्र तन्निरुक्तम्। इदं हि शास्त्रं वैदिककोशः एव। वेदस्थितानां कठिनशब्दानाम् अर्थाः अत्र प्रदर्शिताः। यास्कप्रणीतं निरुक्तमिदानीं प्रसिद्धम्।

**छन्दः** यदक्षरपरिमाणं तच्छन्दः। छन्दयति आह्लादयतीति छन्दः। छन्द्यतेऽनेनेति छन्दः। छन्दांसिच्छादनात् (नि.७/१९) इत्याद्याः छन्दःशब्दस्य व्युत्पत्तयः। वेदप्रयुक्तगायत्री-उष्णिग्-अनुष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगतीत्यादिकानां वैदिकच्छन्दसां निरूपकं शास्त्रं छन्दः। शास्त्रेऽस्मिन् सर्वेषां वैदिकच्छन्दसां प्रकाराः, तदुच्चारणविधिः, तद्गानरीतिश्चेत्यादि विज्ञाप्यते।

**ज्यातिषम्**

वेदविहितानां कर्मणां कालनिर्णयविधायकं शास्त्रं ज्योतिषम्। तत्र लगधादिभिः प्रणीताः आर्च-याजुष-आथर्वणादयो ज्योतिषग्रन्थाः प्रसिद्धाः।

एवमेतावता अपरा विद्या निरूपिता। ननु वेदानाम् अपरविद्यात्वकथनं न युज्यते कुत इति चेद् तेषामपि मोक्षोपायकत्वेन सर्वैः अङ्गीकारादिति चेन्न, नेहाऽपरत्वकथनेन वेदादितिरस्कारे तात्पर्यम्, अपि तु परत्वोपपादनमुखेन साक्षात्कारात्मकविज्ञानस्य वैशिष्ट्यपुरस्कारे एव। तथा हि यदा वेदः तन्मन्त्रार्थानां तिरस्कारेण केवलं शब्दराश्युच्चारण-अनूच्चारणस्य विषयो भवति, अथवा यथाचितगुरुवर्याणां विधिवच्छरणागतिरहितो भवति,

अथवा शिष्यस्य मुमुक्षुतादारिद्र्यतः उक्तार्थग्रहण-धारणदिपाटवरहितो भवति, तदा सत्यपि यत्किञ्चिल्लाभे तच्छब्दसाक्षात्कारात्मकपरमलाभस्य असम्भवात् तस्य अपरत्वकथनमिति। अतः साक्षात्कारात्मकविज्ञानम् अभिप्रेत्य अनुभूतिरहितस्य केवलं शब्दात्मकस्य परोक्षरूपस्य विज्ञानस्य इह कनिष्ठत्वमुच्यते। न च पुनः अपरत्वकथनेन तत् त्याज्यमेवेति वाच्यम्, तथाभूतमपि परविद्यायाः सम्पादने परमौपयिकमिति तूपादेयमेव। अत एव द्वे विद्ये वेदितव्ये इति द्वयोरपि वेदितव्यतया स्पष्टं प्रतिपादनम्। एवं संक्षेपेण अङ्गिरसा अपरा विद्या उपदिष्टा।

## ६. परा विद्या

अपरायाः विद्यायाः निरूपणाऽनन्तरम् अथ शौनकाय परां विद्यामुपदिशति अङ्गिराः अथ परेत्यादिना। इयं परा विद्यैव ब्रह्मविद्येति एतदुपनिषदुपक्रमे “ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्” इति सकलेतरविद्याऽऽश्रयभूततया प्रतिपादिता। तथा हीयं ब्रह्मविद्या साक्षादक्षरं परं च ब्रह्म विषयीकरोति, ज्ञाते चाऽक्षरे परे च ब्रह्मणि सर्वार्थसिद्धेर्न किञ्चिदपि ततोऽधिकं ज्ञातव्यतया अवशिष्यते इति तस्याः सर्वविद्याप्रतिष्ठात्वं परत्वं चोपपद्यते।

### ब्रह्मविद्यास्वरूपम्

इयमेकैवोपनिषद्यत्र ब्रह्मविद्याशब्दं निर्दिश्य तस्याः स्वरूपमभिहितम्। तथा च गुरुरङ्गिराः शौनकं प्रत्याह “येनाऽक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्” (मु.१/२/१३) इति। मन्त्रभावश्चेत्थम् - येन अध्यात्मविज्ञानेन अक्षरम् “अथ परा यया तदक्षरमधिगम्यते” (मु.१/१/५) इत्यादिनोपक्रान्तम् अद्रेश्यात्वादिगुणगमजुष्टं ब्रह्माऽपरनामाऽक्षरतत्त्वं, पुरुषं पुरुषशब्दवाच्यं “यत्राऽमृतः स पुरुषः” (मु.१/२/११) इत्याद्युक्तं “दिव्यो ह्यमूर्तः पुरुषः” (मु.२/१/२) इत्यादौ च वक्ष्यमाणं पुरुषोत्तमतत्त्वं च तत्त्वतः सर्वाङ्गसम्पूर्णतया सत्यं यथावद् वेद जानीयात् सा ब्रह्मविद्येति। एवमनेन ब्रह्मविद्याया लक्षणमभिहितम्। येनाऽक्षरस्य पुरुषस्य च तत्त्वतो ज्ञानं भवति सैव ब्रह्मविद्येत्यर्थः।

### यया तदक्षरमधिगम्यते

परां विद्यामुद्घाटयन् अङ्गिराः प्रोवाच **“अथ परा यया तदक्षरमधिगम्यते”** (मु.१/१/५) इति। अक्षरतत्त्वाऽधिगमेन पराया आरम्भः। तथा च यया विद्यया अक्षरतत्त्वस्य सम्यग् ज्ञानं साक्षात्कारात्मकं भवति सा विद्या परेति श्रुत्यर्थः। अक्षरं ह्यत्र ब्रह्मैव। तदधिगमपुरस्कारेण परा विद्येह उपक्रान्ता। अथ तदधिगमप्रकारं विज्ञापयितुं तत्स्वरूपमेव समाहात्म्यं नानाप्रकारविशिष्टमुपदिशति यत्ततदित्यादिना। तथा च मन्त्रः – **“यत् तदद्रेश्यम् अग्राह्यम् अगोत्रम् अवर्णम् अचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः”** (मु.१/१/६) इति।

**अक्षरात् सम्भवतीह विश्वम्**

पुनश्चाऽपि तस्यैवाऽक्षरस्य ब्रह्मणः विश्वकारणत्वं दृष्टान्तत्रयेण उपदिशति यथोर्णनाभिः सृजते इत्यादिना। तथा च मन्त्रः – **"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्"** (मु.१/१/७) इति। ऊर्णनाभिः प्रथमो दृष्टान्तः। ऊर्णनाभिर्हि लूताऽऽख्यः कीटविशेषः। ऊर्णनाभिः यथा सृजते स्वोपभुक्तं स्वोदरे परिणमय्य तन्तून् बहिर्निष्कासयति। ततस्तेषु विहरति। विहारे च सम्पन्ने तानेव स्वशरीरसृष्टान् बहिर्निष्कासितान् तन्तून् गृह्णते स्वस्मिन् संहरति, तथा अक्षराद् ब्रह्मणो विश्वं सम्भवतीत्युत्तरेणाऽन्वयः।
द्वितीयो दृष्टान्तः ओषधयः। ओषधयो हि वनस्पतयः। यथा भूमौ नानाप्रकारकबीजानुसारं नानाविध तुलसीनिम्बादयः ओषधयः उत्पद्यन्ते तथा अक्षराद् ब्रह्मणो विश्वमुत्पद्यते इत्यर्थः।
तृतीयो दृष्टान्तः पुरुषः। यथा पुरुषशरीरात् केश-नखादीनि प्रयत्नं विनैवाऽनायासेन जायन्ते तथाऽक्षराद् ब्रह्मणो विश्वं सम्भवतीत्यर्थः।

इदमेवाऽक्षरस्य जगत्कारणत्वं द्वितीयमुण्डकाऽऽरम्भेऽग्नेर्विस्फुलिङ्गोदाहरणेन दृढायितं **"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवाऽपियन्ति"** (मु.२/१/१) इति।

**तपसा चीयते ब्रह्म**

ब्रह्मविद्याविषयत्वेनोपक्रान्तमेवाऽक्षरं ब्रह्मशब्देनोपस्थाप्य पुनस्तन्महिमानमाह "तपसा चीयते ब्रह्म" (मु.१/१/८) इति। "यस्य ज्ञानमयं तपः" इत्यत्रैव वचनात् तप इह ज्ञानम्। तच्च संङ्कल्पात्मकम्। तथा च "बहु स्यां प्रजायेय" (तै.२/६/३, छा.६/२/३) इत्यादिपरमात्मसङ्कल्पात्मकेन ज्ञानेनेत्यर्थः। परमात्मसंकल्पानुसारं स्वसंकल्पेनाक्षरं ब्रह्म सृष्टिकार्ये सम्बद्ध्यत इत्यर्थः। अनेन ब्रह्मणो जगन्निमित्तकारणत्वं प्रतिपादितम्।

**यः सर्वज्ञः सर्ववित्**

सर्वज्ञः एव सर्वकर्ता भवितुमर्हतीति तदेवाऽक्षरं सर्वज्ञमिति समुपदिशति यः सर्वज्ञ इत्यादि। तथा च मन्त्रः – "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" (मु.१/१/९) इति। सर्वं जानातीति सर्वज्ञः। सर्वं वेत्तीति सर्ववित्। सर्वं सर्वात्मना सर्वदा सर्वथा चाऽवगच्छतीति भावः। यद्वा सर्वं विन्दते इति सर्ववित्। विद्लृ लाभे (पा.धा.पा.१४३२) इति धातोः क्विप्। सर्वं लभत आप्तकाम इत्यर्थः।

**तदेतदक्षरं ब्रह्म**

द्वितीयमुण्डकस्य द्वितीयखण्डस्याऽऽरम्भेऽक्षरब्रह्मस्वरूपं निरूपितम्। तत्राऽऽदौ तत्स्वरूपं निरूप्य ततस्तद्वेदनीयत्वं लक्ष्यत्वं प्रतिपाद्यते। तदुक्तमङ्गिरसा **"आविः सन्निहितं**

गुहाचरं नाम महत्पदमत्रैतत् समर्पितम्। एजत् प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद् वरिष्ठं प्रजानाम्॥(मु.२/२/१)

**"यदर्चिमद् यदणुभ्योऽणु च यस्मिंल्लोका निहिता लोकिनश्च। तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः। तदेतत् सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि॥"** (मु.२/२/२) इति।

एतत्सारश्चेत्थम् – तत्तल्लोके स्वेच्छया मनुष्यादिरूपेणाऽऽविर्भूतत्वम्, सर्वसन्निहितत्वम्,परमदिव्यधामरूपत्वं, तत्रैव प्रकारान्तरेण परमात्मसेवासमर्पितत्वं, एजनप्राणननिमेषादियोग्यकरणकलेवरविशिष्टत्वं, ज्योतिष्मत्त्वं, सूक्ष्माऽतिसूक्ष्मत्वं, सर्वलोकाधारत्वमित्यादिगुणगणविशिष्टमक्षरं ब्रह्मेति।

## अधश्चोर्ध्वं च प्रसृतं ब्रह्मैव

एवंगुणविशिष्टमक्षरं ब्रह्म सर्वव्यापकमित्युपदिशन्नाह **"ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वं वरिष्ठम्"** (मु.२/२/११) इति। पुनश्चाऽऽह "बृहच्च तद् दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति। दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्" (मु.३/१/७) इत्यादि।

## यस्मिन् द्यौः पृथिवी चाऽन्तरिक्षमोतम्

पुनश्चेदमक्षरं ब्रह्म सर्वाधारमिति प्रब्रवीत्यङ्गिराः **"यस्मिन् द्यौः पृथिवी चाऽन्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः"** (मु.२/२/५) इति। ओतं नामाऽऽश्रितम्। द्युलोक-पृथिवीलोकाद्युपलक्षितानां सर्वेषां लोकानामाधारमक्षरमित्यर्थः। "यस्मिंल्लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म" (मु.२/२/२) इति प्रागुक्तमेवेह प्रकारान्तरेण स्मारितम्।

इदमेव समाम्नायते छान्दोग्ये दहरविद्यायाम् "स ब्रूयाद् यावान् वा अयमाकाशस्तावानेष अन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्यचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चाऽस्येहाऽस्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" (छा.८/१/३) इति। याज्ञवल्क्योऽप्याह गार्गीं प्रत्यक्षरब्राह्मणे "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" (बृ.३/८/९) इत्यादि।

## एतत् परमं ब्रह्मधाम

ब्रह्मविद्यासाक्षात्कारेण परमपदप्राप्तिरिति प्रतिपादयन् गुरुरङ्गिरा धामरूपं ब्रह्म निरूपयति स वेदेत्यादि। तथा च मन्त्रः **"स वेदैतत् परमं ब्रह्मधाम यत्र विश्वं निहितं शुभ्रम्। उपासते पुरुषं य ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः"** (मु.३/२/१) इति। अयमस्य भावः – पूर्वोदिष्टज्ञानप्रसादेन लब्धब्रह्मविद्यो भक्तः एतस्यामुपनिषदि "महत्पदम्" (मु.२/२/१), "ब्रह्म तल्लक्ष्यमुच्यते" (मु.२/२/४), "न तत्र सूर्यो भाति न चन्द्रतारकम्" (मु.२/२/१०)

इत्यादिवाक्यैः समुपदिष्टस्वरूपं ब्रह्मलोकं साक्षात्करोति। यस्मिन् ब्रह्मलोके नैकब्रह्माण्डात्मकं सर्वं जगदाश्रितम्। यस्मिंश्च ब्रह्मलोके वर्तमानं सर्वं शुभ्रं मायासंसर्गाऽभावाद् निर्दोषं भातीति।

**दिव्ये ब्रह्मपुरे प्रतिष्ठितः**

इदं ब्रह्माऽक्षरं ब्रह्मलोकेऽपि विभातीति वर्णयन्नङ्गिराः शौनकाय प्राह **"दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता"** (मु.२/२/७) इति। दिव्येऽलौकिकेऽक्षरधाम्नि मनःप्राणशरीरादिदिव्यकरणकलेवरयुतं सर्वात्मभूतं ब्रह्म प्रतिष्ठतीत्यर्थः। अनने ब्रह्मणः साकृतिकं रूपं प्रतिपादितम्। पुनश्च तदेवाऽऽह **"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।"** (मु.२/२/) इति। अतिप्रकाशसंयुते सर्वोत्कृष्टे ब्रह्मलोके तदेव गुणातीतं निष्कलं च ब्रह्माऽभिवर्तत इति भावः।

**अमृतस्यैष सेतुः**

अङ्गिरा उपदिशति **"तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथाऽमृतस्यैष सेतुः॥"** (मु.२/२/५) इति। हे शौनक, तदक्षरमेव तवाऽऽत्मानं जानथ। ममाऽऽत्माऽक्षरमित्यात्मगृहीत्या तदनुसन्धानं कुरु, अन्याश्च ब्रह्मविद्याऽनुपयुक्ताः प्रेयोमार्गप्रधानाः परविद्याप्रापणेऽनलंभूता वाचश्च परित्यजेत्यादेशः। यतो हि एष ब्रह्मगुरुरमृतस्वरूपस्य परमात्मप्राप्तेः सेतुरपीत्यर्थः। अयं भावः – लोके यथा सेतुः स्वाऽऽरूढेभ्यो मध्यपातिनां नदीनदादीनां दुस्तरप्रवाहजनितस्य कष्टस्य निवारणपूर्वकं सुसुखं परतटस्य प्रापको भवति, तथैव साक्षादक्षरब्रह्मस्वरूपो गुरुरपि स्वप्रसंगोपदेशादिभिः स्वाश्रितेभ्यो दुस्तरसंसारदुःखनिवारणपूर्वकं सुसुखं परमात्मसहजानन्दरूपपरतटप्रापको भवतीति। तथा च कठे यमोऽपि नचिकेतसे एतदेवाऽक्षरं सेतुमाह "यः सेतुरीजानानाम् अक्षरं ब्रह्म यत्परम्" (कठ.३/२) इति।

**तदेवाऽक्षरं सोम्य विद्धि**

यस्मादेवंमहिममण्डितऽक्षरं ब्रह्म तस्मादेव तल्लक्ष्यं वेद्धव्यं च भवतीति शौनकं प्रति विज्ञापयितुकामोऽङ्गिरास्तद्वेधनरीतिं स दृष्टान्तमाह द्वाभ्यां मन्त्राभ्यां धनुर्गृहीत्वेत्यादि।
तथा च मन्त्रौ

> **"धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत।**
> **आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाऽक्षरं सोम्य विद्धि॥"** (मु.२/२/३)
> **"प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।**
> **अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्॥"** (मु.२/२/४) इति।

तदेवाऽक्षरं सोम्य विद्धीति यदुक्तं तत्रैव तद्वेधनप्रकारमपि संददर्श प्रणवो धनुरित्यादिना। अयं हि तद्रूपकभावः – यथा धनुर्धारिणो धनुर्गृहीत्वा शरं तत्र सन्धायाऽऽकर्णमाकृष्य धनुःशरसंसर्गसावधानाः सन्तो लक्ष्यमात्राऽनुचिन्तनेन तद्वेधनफलका

भवन्ति तथा मुमुक्षुभिरपि ह्युपनिषत्प्रोक्तं प्रणववाच्यं साक्षादक्षरब्रह्मगुरुरूपं धनुर्गृहीत्वा, तत्र शरोपमं स्वात्मानं सन्धाय तद्दृढतमप्रसंगात्मकेनाऽऽकर्षणेन स्वात्माऽक्षरब्रह्मसंसर्गसावधानैः ब्रह्मधामरूपलक्ष्यमात्राऽनुचिन्तनेन तत्प्राप्तिः कर्तव्या। अपि च यथा प्रक्षिप्ततीक्ष्णशरो लक्ष्यं प्रविश्य तदन्तर्निलीनस्ततोऽविभक्तस्तदनुलग्नस्तिष्ठति तथा मुमुक्षुभिरपि ब्रह्म लक्ष्यतयाऽऽलक्ष्य स्वात्मनस्तत्र संलग्नताऽऽपादनीयेत्युक्तं **शरवत् तन्मयो** भवेदिति।

एवमेतावता ब्रह्मविद्याविषयभूतस्याऽक्षरस्वरूपादिकमुक्तमथ पुरुषशब्दवाच्यस्य परब्रह्मणस्वरूपादिकमुच्यते।

## पुरुष एवेदं विश्वम्

पुरुषशब्दो ह्यस्यामुपनिषदि परमात्मानमभिप्रेत्य प्रयुक्तः। तस्य च परमात्मनः सर्वकारणत्वं सर्वव्याकत्वाच्च सर्वात्मकत्वमित्युपदिशति गुरुरङ्गिराः शौनकं प्रति। तथा च मन्त्रः – "पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्। (मु.२/१/१०) इति।

यस्माच्च परमात्माऽस्य जगतो निमित्तोपादानकारणं यस्माच्च स सर्वव्यापकः सर्वात्मकस्तस्माद्धेतोः "पुरुष एवेदं विश्वम्" इत्यादि सामानाधिकरण्येन निर्देशः।
पुनश्च सर्वं तत एवोत्पन्नमिति वर्णयति -

**"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥"** (मु.२/१/३)

**"तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।**
**संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः॥"** (मु.२/१/६)
**"तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि।**
**प्राणाऽपानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च॥"** (मु.२/१/७) इत्यादि।

## उपासते पुरुषम्

अयं हि पुरुषोत्तमः सर्वेषामुपास्य इति वर्णयन्नाह "उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः" (मु.३/२/१) इति। **ये हि** मुमुक्षवः **अकामाः** परमात्माऽतिरिक्तवासनाशून्याः सन्तः एतं **पुरुषं** पुरुषोत्तमम् **उपासते** तत्परमभक्तिमग्ना भवन्ति **ते शुक्रं** संसारजन्मबीजं **अतिवर्तन्ति** अतिक्रामन्ति, जनिमृतिरहिता भवन्तीत्यर्थः।
एतदेव प्रागप्युपदिष्टम् - **"तपःश्रेद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः। सूर्यद्वारेण ते विरजाः प्रयान्ति यत्राऽमृतः स पुरुषो ह्यव्ययात्मा॥"** (मु.१/२/११) इति।
तपश्चेह शास्त्रविहितकर्माऽनुष्ठानात्मकं बाह्याऽभ्यन्तरेन्द्रियगणसंयमौपयिकं बोध्यम्। श्रद्धाऽपि परमाऽऽस्तिक्यबुद्धिरूपा ब्रह्मस्वरूपगुरुतदुपदिष्टशास्त्रवचनविश्वासरूपा च बोध्या। सूर्यद्वारेण इति पदेनेह वेदान्तोक्ताऽर्चिरादिगतिः प्रबोधिता। यत्राऽमृतः स पुरुषः इत्यत्राऽपि यत्र पदस्याऽर्चिरादिगतिना लभ्यमाने परमदिव्यदेशविशेषे परमात्मधाम्नीत्यर्थः। पुरुष इत्यस्य च

परमात्मेत्यर्थः। तथा च ये हि ब्रह्मविदावन्तः शान्ता जनाः तपःश्रद्धावन्तः सन्तः अरण्ये उपवसन्ति परमात्मानं चोपासते तेऽर्चिरादिना मार्गेण ब्रह्मलोकं प्रयान्ति यत्र अमृतः परमात्मा नित्यं निवसतीतिभावः।

**अक्षरात् परतः परः**

ततश्च पुनः सविस्तरं परब्रह्मस्वरूपमुपदिष्यते। तथा च मन्त्रः – **"दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः॥"** (मु.२/१/२) इति। इत्थं चाऽस्या अर्थः - **स** चाऽयं **पुरुषः** परमात्मा सदा दिव्यः सदा साकृतिकोऽपि मायिकाऽऽकृतिरहितोऽत एव मायिकप्राणमनआदिरहितो **बाह्याभ्यन्तरः** स्वान्तर्यमनशक्त्या बहिरन्तश्च सर्वमभिव्याप्य प्रस्थितः, **ह्यजः** कर्माऽविद्यादिजन्यजनिरहितः, नित्यं मायामलगन्धशून्यत्वात् **शुद्धः, परतः** बद्धमुक्तजीवेश्वरादिभ्योऽपि परभूताद् **अक्षरात्** प्रागुक्तात् **परः** परभूतः श्रेष्ठस्तत्प्रेरकस्तदाधारस्तद्व्यापकश्चेत्यर्थः। अनेन "अव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" (कठ. ३/११), "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥" (गी.१५/१८) इत्याद्युक्तोऽर्थः संगच्छते।

**नाऽयमात्मा प्रवचनेन लभ्यः**

अस्य परमात्मनः साक्षात्कारे यानि साधनानि तानि निरूपयति महर्षिरङ्गिराः। तथा च मन्त्राः -

**"सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः॥"** (मु.३/१/५)
**"नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तस्यैष आत्मा विवृणुते तनुं स्वाम्॥"** (मु.३/२/३)
**"नाऽयमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसा वाऽप्यलिङ्गात्।**
**एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम॥"** (मु.३/२/४) इत्यादयः।

सत्यं, तपः, ज्ञानं, ब्रह्मचर्यं, मनोबलम्, अप्रमादादयो हि तत्साक्षात्कारेऽपेक्षितसाधनानि। तत्राऽपि यमेवैष वृणुते तेन लभ्यः इति श्रुतेः परमात्मा नैव क्रियासाध्योऽपि तु तत्कृपैकसाध्य इत्यवगम्यते।

एवमेतावता ब्रह्मविद्याविषयभूतस्याऽक्षरस्य पुरुषोत्तमस्य च स्वरूपगुणैश्वर्यादि प्रदर्शितम्। अथाऽङ्गिरसा प्रकटितं तत्प्राप्त्युपायमवगच्छामः।

## ७. गुरुसमाश्रयणम्

**तद् विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्**

अथ वेदितव्यतया प्रक्रान्तायाः परविद्यायाः प्राप्त्यर्थं गुरुसमाश्रयणमनिवार्यमिति सिद्धान्तयितुमाह **"तद् विज्ञानार्थं स गुरुमेवाऽभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्म निष्ठम्"**

(मु.१/२/१२) इति। ब्रह्मविद्यायाः साक्षात्कारार्थं मुमुक्षुः हस्ते समिधं गृहीत्वा गुरोः शरणमभिगच्छेदित्यर्थः। अत्र श्रोत्रियमित्यस्य सुश्रुतसर्ववेदान्तार्थः साक्षात्कृतसर्वश्रुत्यर्थः स्वाचरणोपदेशादिना श्रुत्युक्तब्रह्मविद्याबोधनकुशलश्चेत्यर्थः। ब्रह्म साक्षादक्षरं ब्रह्म इत्यर्थः। नितान्तं निष्ठतीति निष्ठः। क्वेत्याक्षेपात् परमात्मनीति लभ्यतेऽतः सदा परमात्मनिष्ठ इत्यर्थः।

**गुरुलक्षणानि –**

**श्रोत्रियं ब्रह्म निष्ठम्**

अनेन गुरोर्लक्षणान्युपदिष्टानि। गुरुशब्दस्यैवं व्युत्पत्तिं दर्शयन्ति प्राज्ञाः – **"गुकारोऽन्धकारोऽस्ति रुकारस्तन्निवर्तकः। अन्धकारविरोधित्वाद् गुरुरित्यभिधीयते॥"** इति। अनाद्यज्ञानतमःपुञ्जप्रत्यनीकत्वाद् ब्रह्मविद्याज्योतिःपुञ्जोज्वालयितृत्वाच्च गुर्वित्यन्वर्था संज्ञा वैदिकसम्प्रदायपरम्परापरिरक्षकाणाम्। अत्र श्रोत्रियमित्याद्युपलक्षणमन्येषामपि गुरुलक्षणानाम्। तेन शास्त्रोक्तानि निष्कामत्वं निर्लोभत्वं निःस्वादत्वं निःस्नेहत्वं गुणातीतत्वं सहजानन्दोत्तमनिर्विकल्पनिश्चयप्रस्थापकत्वमित्यादीनि गुरुलक्षणानीहाऽनुसन्धेयानि। अनेन देवाऽऽगारमठादिसंचालनमात्रेण तदाधिपत्यवतां सितकाषायादिवस्त्रपरिधानमात्रेण वा गुरुवदाभासमानानाम् असाक्षात्कृततत्त्वसिद्धान्तानां व्युदासः। न ते गुरुत्वे स्थापनीया इति भावः।

गुरुमेवाऽभिगच्छेदित्येवकारो हि ब्रह्मविद्याप्राप्त्यर्थं गरूपसत्तौ नियमविधिं ज्ञापयति, ब्रह्मविद्याऽभीप्सा चेद् गुरुरवश्यमाश्रयणीय इति।

अभिगच्छेदित्यपि न केवलं गुरुणा सह केवलं निवासः पर्याप्तोऽपि तु "श्रद्धावान् लभते ज्ञानम्" (गी.४/३९) इत्यादावुक्तं गुरुवचनादिषु विश्वासादि, "तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया" (गी.४/३४) इत्याद्युक्तं नम्रताजिज्ञासागुरुसेवादि, "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" (श्वे.६/२३) इत्यादौ स्फुटमुक्तं गुरौ प्रत्यक्षनारायणस्वरूपभावादि सर्वं सानुषङ्गं लक्षयति।

**शिष्यलक्षणानि –**

**उपसन्नाय प्रशान्तचित्ताय शमाऽन्विताय**

उपर्युक्तगुणविभूषितगुरोः शरणस्वीकारे सद्गुणमण्डितस्य शिष्यस्य फलमाह तस्मै स इति। तथा च मन्त्रः – **"तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमाऽन्विताय। येनाऽक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥"** (मु.१/२/१३) इति। इहाऽपि शिष्यधर्माः प्रदर्शिता उपसन्नायेत्यादि। तथा हि **सम्यगुपसन्नाय** शास्त्रोक्तविधिना समित्पाणित्वादिना नम्रताजिज्ञासासेवाभावनादिगुणतया शरणमुपगताय, **प्रशान्तचित्ताय** प्रशान्तं ब्रह्मविद्यातिरिक्तसकललौकिकवासनोपसंहृतं गुरुवचनमात्राऽवहितं दर्पाऽसूयादिदोषरहितं चित्तमन्तःकरणं यस्य तादृशाय प्रशमितचेतस इत्यर्थः। **शमान्वियताय**

ब्रह्मविद्याऽनुकूलो यः शमश्चक्षुरादिबाह्येन्द्रियनियमनरूपस्तेनाऽन्विताय तस्मै तादृशगुणयुक्ताय शिष्यायेत्यर्थः। यथोक्तगुणान् शिष्यजीवने परीक्ष्य तदनन्तरमिति भावः। ततस्तस्मै येनाऽक्षरं पुरुषं च तत्त्वतो वेद तादृशीं ब्रह्मविद्यामुपदिशति गुरुरिति सकलोर्थः। इयमेव ब्रह्मविद्या भगवद्गीतायाः शब्देषु वर्णनीया चेदक्षरपुरुषोत्तसिद्धान्त इति वक्तुं शक्यते। गीतायां खल्वष्टमाऽध्यायोऽक्षरब्रह्मयोगोऽस्ति, पञ्चदशाऽध्यायश्च पुरुषोत्तमयोग इति। तत्र यदक्षरं वेदविदो वदन्ति (गी.८/११) इत्यादिनाऽक्षरब्रह्ममहिमाऽष्टमे, "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" (गी.१५/१८) इति च पञ्चदशे भगवता सम्यङ् मुण्डकोपनिषदेव संस्मृता।

## ८. ब्रह्मविद्यायाः फलानि

यदा हि ब्रह्मविद्यां सम्यग् लभते तदा तत्फलान्यपि विशिष्टानि भवन्तीति नैकैः प्राकारैः प्रदर्शयति शौनकं प्रत्यङ्गिगराः। यथा –

- "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" (मु.२/१/१०)

यथोक्तप्रकारेण परमात्मनोऽक्षरपरत्व-सर्वव्यापकत्वादिविज्ञानस्य फलमिदम्। मन्त्रस्थेन इहेतिशब्देनाऽस्मिन्नेव देहे लोके चाऽविद्याबन्धनाद्विमुक्तिरिति। अनेन जीवन्मुक्तिरपि प्रतिपादिता।

- **"तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति"**(मु.२/२/७) इति। यथावदक्षरब्रह्माऽधिगमेन सहजानन्दपरब्रह्मसाक्षात्कारं लभत इति भावः।
- **"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे॥"** (मु.२/२/८) इति।

परभूतमक्षरमप्यवरं न्यूनं यस्मात् तथाभूते पराऽवरेऽक्षराधिपतौ पुरुषोत्तमे साक्षात्कृते सति सर्वा अपि वासनाः संशया बन्धनकराणि कर्माणि च विनश्यन्तीत्यर्थः।

- **"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मु.३/१/३) इति।

प्राप्तब्रह्मविद्यः परमात्मोपासको बन्धमूलभूते पुण्यपापे परित्यज्य निरञ्जनः सन्, अञ्जनया वासनया रहितः सन् निर्दुःखत्व-निर्लेपत्वादिलक्षणं ब्रह्मगुणसाम्यं लभत इति भावः।

- **"तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति"** (मु.३/२/९) इति।

सर्वथा शोकात् पापाद् वासनायाश्च विमुक्तः सन् अमृत्वलक्षणं मोक्षमाप्नोतीति भावः।

## ९. उपसंहारः

एवं ब्रह्मविद्यानिरूपणसभराम् उपनिषदम् उपसंहरता समाम्नायते - **"तदेतत् सत्यमृषिरङ्गिगराः प्रोवाच नैतदचीर्णव्रतोऽधीते। नमः परमऋषिभ्यो नमः परमऋषिभ्यः"** (मु.३/२/११) इति।

यदपीहोक्तं तत्सर्वं सत्यमेव। एवं परविद्याऽपरपर्यायभूतब्रह्मविद्यात्मकस्य सत्यस्योपदेशकेभ्योऽङ्गिरस्तुल्येभ्यः परमर्षिभ्यो नमस्काराऽञ्जलिं समर्प्य सन्तुष्टेयमुण्डकोपनिषदिति शम्।

इत्थं पाठेऽस्मिन् पराऽपरा चेति विद्याद्वैविध्यं, तयोश्च पराऽपरयोः स्वरूपं, तत्प्रापणे गुरूपसत्तेरपरिहेयता, ब्रह्मविद्यायाश्च फलानीत्यादि संक्षेपेण विज्ञातमित्यवश्यमिदमस्या आपातपरिचयाय पर्याप्तमिति विरम्यते। ॐ नमो नारायणस्वरूपाय॥

